अ॰ स॰
१

श्रीगणेशाय नमः ॥ शुभमस्तु ॥ विश्वेश्वरं नमस्कृत्य सर्वप्रत्ययकार
णं ॥ सुंदरस्यापराधस्य टीकेयं लिख्यते मया ॥ १ ॥ शंभो सुखं भवत्यस्मा
दिति शंभुर्विश्वनाथस्तस्य संबोधने हे शंभो मेऽपराधः क्षंतव्य इ
त्यन्वयः । इतः परमन्यच्छ्रेयो नास्तीति पुनरपि बहुधा संबोधयति शि
वेत्यादिना । शंभो संबोधने हे शिव सुखस्वरूप । आनंदो ब्रह्मेति व्यजा
नादिति श्रुतेः । पुनः शंभो शिव शांतस्वरूप । निष्कलं निष्क्रियं शांतमि
ति श्रुतेः । पुनरपि शंभो शिव परममंगलरूप । मंगलानां च मंगलमिति
श्रुतेः हे श्रीमहादेव । अयं स्वेतां योगिन इति श्रीब्रह्मविद्यामहांत्रि
विधच्छेदशून्यः देवः द्योतनात्मकः । तदुक्तं द्योतनाद्देव इत्युक्तेः

ग

राम

परमात्मा सनातनः। त्रिविधोस्य परिच्छेदो महच्छब्देवाच्यतइति। ब्रह्मवि
द्या स्वरूपत्रिविधपरिच्छेदशून्यस्य प्रकाशो सर्थः। अत्रि मेघप्येवमेवयोज
नाकर्तव्या। अपराधानेवाह। आदाविति। आदौ कर्मवशात् मातृकुक्षौग
तस्य मम कर्मजन्यं कलुषं पापं कर्तृ अर्थात् मां कलयति पीडयति। स्थि
तमामिति पाठे स एवार्थः। पश्चात् तस्मिन्कुक्षौ यन्मूत्रं अमेध्यं पुरीषं च तत
यो र्मध्ये मां मातुः जाठरो वह्निर्नितरामतिशयेन क्वथयति तापयति। गत
स्याः। तत्र कुक्षौ यद्दुःखं तत्केन वक्तुं शक्यते। कथंभूतं विषगतिविषमं स
र्वादेर्यद्विषं तस्य यागतिस्तत्स्याः॥१॥ अंतरानुक्त्वा बाल्यानाह। बाल्ये दुः
खातिरेको दुःखातिशयः। तमेवाह। मलेन विष्ठादिना लुलितवपुर्लि

॥श्री

अ० स०
२

मदेहः। किंच स्तन्यपाने पिपासा पातुमिच्छा किं च चः समुच्चये। इंद्रिये
भ्यो यद्दुःखं चक्षुरादिपीडारूपं तदपि च वक्तुं नो शक्यं भावो सादकार्ये सत्वा
दयो गुणास्तैर्जनितायेजंतवो मत्कुणादयः स्तैमां तुदंति दशंतिव्यथैयंति।

॥आदौ कर्मप्रसंगात्कलयति कलुषं मातृकुक्षौ स्थितं मां विण्मूत्रामेध्य
॥मध्ये व्यथयति नितरां जाठरो जातवेदः॥ यद्यद्वा तत्र दुःखं विषग
॥ति विषमं शक्यते केन वक्तुं क्षंतव्यो मेपराधः शिव शिव शिव भो श्री
॥महादेव शंभो॥१॥

यंति। यद्दति यत्तदपि च यद्यप्येवं तथापि शंकरं परमानंदकरत्वान्न स्म
रामि। कुतो न स्मरसि तत्राह। नानाव्योगाः शिरपीडादयस्तद्दुःखं यद्दुः

तं मां

राम
२

खं तस्मात् रोदनपरवशोयतः स्तवगुणाजनितेति पाठे पिपासायाविशेषण। तत्र भवस्तस्मादिति भवः कर्मजन्मांतरस्तैस्तनपानरूपैस्तस्य गुणः संस्कारस्तज्जनितेति॥२॥ बाल्यानुक्तायौवनानाह। प्रौढ इति। बाल्य

॥बाल्ये दुःखातिरेकोमललुलितवपुःस्तन्यपानेपिपासानोशक्यंचें।
॥द्रियेभ्योभवगुणाजनिताजंतवोमांतुदंति॥नानारोगोत्थदुःखा॥
॥द्रुदनपरवशः शोकरंनस्मरामिक्षंतं॥२॥ प्रौढोहंयौवनस्थो॥
॥विषयविषधरैः पंचभिर्मर्मसंधौदष्टोनष्टोविवेकः सुतजनयु॥
वतिस्वादुसौख्येनिषण्णः॥

नंतरमहं प्रौढः। प्रौढशब्दार्थमाह। यौवनस्थ इति। कथंभूतः पंचभिर्ज्ञानेंद्रियैर्मर्मसंधौ चक्षुरादिजन्मांतःकरणवृत्तौ दष्टविषयान्निसुखे

ण्णः

उ.स.
७

रिंद्रियैर्विषयेषुप्रवेशितः॥ अत एव नष्टः विवेकः खलु आत्मानात्मज्ञानः।
अत एव सुतादिजन्यस्वादुसौख्ये त्रिलुषितसुखाभासे विषण्णः नि
मग्नः जन्यसुखे जन्यसुखबुद्धिरित्यर्थः॥ अत एव नो वीचिंता विस्थेरा

॥ नो वीचिंता व्यातीता मम हृदयमहो मानगर्वाधिरूढं क्षांत ॥३॥
॥ नो वाक्यं स्मार्तकर्मप्रतिपदगहनं प्रत्यवायाकुलाख्यं श्रौतं वा ॥
॥ तां कथं मे द्विजकुलविहितं ब्रह्ममार्गे स्थसारे ॥ ॥

ध्यानलक्षणा चिंता व्यतीता गता। अहो खलु मम हृदयं मनः स्व्य
ताग र्वाभ्यां घ्यतादिस्ते अधिरूढं प्राप्तं॥३॥ पुनरपि यो वनाने वाह॥
नो वाक्यमिति। स्मृतिप्रतिपादितं कर्म स्मार्तं तच्च तत् कर्म च तद्

राम

पिनोकर्त्तुमितिशेषः। कथंभूतं प्रतिपदगहनं। पदं क्षणो क्षणो प्रतिविघ्न
बाहुल्येन गहनं दुःसाध्यं कर्त्तुं चिकीर्षमाणमपि सम्पक्षुब्धलंन भवती
त्यर्थः। प्रतिदिन गहनमिति वा विसाढः। तत्र स्पष्ट एवार्थः। पुनः कथं

॥ ज्ञातो धर्मो विचारः श्रवणमननयोः क्वानिदिध्यासितव्यः क्षंतः
॥ ७॥ वार्द्धक्ये स्वेंद्रियाणां विगतगतिमतिश्चाधिदेवादितापैः
॥ पापै रोगैर्वियोगैस्त्वयि वसितवपुषः प्रौढिहीनं च दीनं॥

भूतं प्रसवायेराकुलं व्याप्तं। आख्यायते कथ्यत इति प्रसवाख्याकु
लाख्यं। यदास्मात्तमपि कर्म कर्त्तुमशक्यं तदा श्रौतेः स्मृतिप्रतिपादि
तकर्मणि ममवार्त्ता प्रवृत्तिः कथं स्यादेवेत्यर्थः। कथंभूतेद्विजानां

म

ब्राह्मणाक्षत्रियविशां कुलानि तैर्विहिते अनुष्ठिते प्रवर्त्तित इत्यर्थः। पुनः कथं
भूते तेब्रह्ममार्गे ब्रह्मप्रापकवर्त्मरूपे। अत एव स्वस्य आत्मनः सारे सुसार
इति क्वचित्पाठः। तत्र ज्ञोत्तमसारभूत इत्यर्थः। कथं चिन्नोदनालक्षणो यो
धर्मो यो विचारश्च वेदान्तज्ञानस्तथापि श्रवणमननयोः को निदिध्यायतेतव

॥ मिथ्यामोहाभिलाषैश्चलमतिममममनो धूर्जटे ध्यानशून्यं क्षंतव्य०॥५॥
॥ स्थित्वास्थाने सरोजे प्रणवमयमरुत्कुंभिते ब्रह्मरंध्रे स्वांते शांते प्रली॥
॥ ने प्रकटितगहने ज्योतिरूपे पराख्ये॥ लिंगं तद्ब्रह्मवाच्यं सकलसु॥
॥ रनतं नैव दृष्टं कदाचित्क्षंत०॥६॥

को निदिध्यासितव्य इत्यर्थः॥ ५॥ वाङ्मूकापराधानाह। वाङ्क्यचेतिम
म मनो मिथ्या प्रवृत्तो यो मोहस्तज्जन्यैरभिलाषैर्धूर्जटे ध्यानशून्यं तत्र

मतिरस्यन्वयः। कथंभूतस्य मम इंद्रियो विषयानुप्रति विगतागतिर्मनंम
तिश्च तत्तज्ञानं यस्य तस्य। पुनः कथंभूतस्य आधिदैवादितापत्रितयैः।
रोगैर्ज्वरविस्फोटादिभिश्च कलत्रादीनां वियोगैश्च विश्लेषेण अवसितमाबं
ध्यं वपुर्यस्य तस्य। कथंभूतैरेतैः पापैः पापजन्यैः। कथंभूतं मनः प्रौढिदी
नं प्रौढिर्यस्य भून्यं गं २५।। वानप्रस्थाश्रमह्लतापराधानाह। स्थितेति। स्थितेति
स्थित्वा स्थाने विविक्ते देशे स्थितात्ते लिंगं चतुर्भुजाधिरूपं कदाचिन्न द्रष्ट
मिसन्वयः। कस्वांते सरोजे हृदयकमले। कथंभूते प्रणवमयः संचर
प्रधानो मरुत् तेन कुंभिते स्थिरीकृते। पुनः कथंभूते सूक्ष्ममार्गे दुर्लक्ष
ब्रह्मवदनमार्गे ऽणुस्थाने। ब्रह्मरंध्रेति क्वचित्पाठः। तत्रापि स एवार्थः।

अ॰स॰
५

पुनः कथंभूते शांतमलीने ब्रह्माकारवृत्तिरूपे। पुनः कथंभूते प्रकटितं प्रका
शितं गहनं दुर्ज्ञेयतत्त्वं येन तस्मिन्। पुनः कथंभूते ज्योतिरूपे निर्मले संज्ञापू
र्वको विधिरिति दीर्घाभावः। पुनः कथंभूते परंब्रह्म आख्यायते प्रकाश्य
ते येन तस्मिन्। कथंभूतं लिंगं ब्रह्मवाच्यं वेदप्रतिपाद्यं। पुनः कथंभूतं
सकलसुरनतं ब्रह्मादिभिर्नमस्कृतं॥५॥ चतुर्थाश्रमहृतापराधा
नाहानयइति। परमहंसो वानरशानो भूत्वा तान् स्मरामीति संबंधः।
कथंभूतः निर्गलाशंकासंदेहो यस्य सः सत्वासोऽशुद्धश्च पापासंबद्धः।
शुद्धमपापंविद्धमिति श्रुतेः। पुनः कथंभूतः त्रिगुणविरहितो गुण
त्रयातीतः। केवलो निर्गुणइति श्रुतेः। पुनः कथंभूतः ध्वस्तो नष्टः मो

राम
५

हांधकारव्याकरणविक्षेपरूपत्राणिद्वयमुक्तात्तानलक्षणोयस्यसः।पुनः
कथंभूतः नासायानासिकायाअग्रेदृष्टिर्दर्शनंयस्यसः।अनेनचित्तस्य
लयविक्षेपरादिसंदर्शितं।पुनःकथंभूतः विहतंनष्टंभवभयंयस्यसः।नर
त्तिशोकमात्मविदितिश्रुतेः।पुनःकथंभूतः नैवदृष्टिरर्थात्द्वेषिणी

॥नष्टोनिःशोकशुद्धस्त्रिगुणविरहितोध्वस्तमोहांधकारोनासाग्रे॥
॥न्यस्तदृष्टिर्विहतभवभयोनैवदृष्टिःकदाचित्॥उन्मन्यावस्थ॥
॥यात्वांविगतकलिमलशोकरंनस्मरामिक्षतेऽ॥५॥ध॥

यस्यसः।उन्मन्नेतद्रूपाऽवस्थाउन्मनीअवस्थातयाध्यातृध्येयध्यान
शून्ययाअसंप्रज्ञातसमाधिरूपया।यद्वाउद्गतेमनःमनोवृत्तिर्यस्यांत

अ॰ स॰
६

याः वस्थया। उणादिनिपातनात्साधुत्वं। तथा च श्रीभागवते। सोप्येतया
च्चरमया मनसो निवृत्सोस्यादि। उन्मन्यां निरंजने इति च योगशास्त्रे तत्रा
यमर्थः। उन्मन्यामपगतमनोभावलक्षणायामवस्थायां निरमलश्चय

स्नात्वा प्रत्यूषकाले स्नपनजलविधौ नाहृतं गांगतोयं पूजार्थे वा क।
दाचिद्बहुतरगहनात्खंडबिल्वीदलानि॥ नानीता पद्ममाला सर॥
सि विकसिता गंधधूपे त्वदर्थे क्षंत०॥ ८॥

स्माद्विह्वानामित्यर्थात्॥ ७॥ सर्वावस्थासाधारणानपराधानाह। स्नात्वे
ति। प्रत्यूषे काले प्रातःसमये स्नात्वा त्वदर्थं मयैवेतन्न संपादितमित्यध्या
हारः। एतच्च द्वार्थमाह। तव स्नपनजलविधौ स्नानार्थजलविधाने त

राम
६

तत्काले शीतोष्ण सुगंधादि संपादनार्थं गांगतोयं गंगाजलेनाहृतेनानी
तो। वा शब्दः समुच्चये। तव स्नानार्थं मर्त्यानिमित्तं बहुतराणि बहुलानि गह
नानि दृढानि अखंडानि बिल्वीदलानि बिल्वपत्राणि च नाहृतानि इति
विपरिणमय्यान्वयः गंधधूपैः सह सरसि विकसितापद्ममाला च ना

॥ध्यातं चित्ते शिवाख्यं प्रचुरतर धनं नैव दत्तं द्विजेभ्यो हव्यं ते लक्ष॥
॥संख्यं हुतं वह्नि वदने नार्पितं बीजमंत्रैः॥ नो दृष्टं गांगतीरे व्रत॥
॥परिचरणैः रुद्रजाप्येन देव क्षंतव्य॥ १॥

नीला। सरसि विकसितानां माला च नसंपादितेत्यर्थः। कदाचिदिति सर्व
त्र॥ ८॥ पुनः सिंहावलोकनन्यायेन गार्हस्थ्यानपराधानाह। ध्यानमि
ति द्वयेन। चित्ते मनसि शिवमिसाख्या यस्य तच्छ्यानं न कृतमिति शेषः।

पत्रांक २

अ॰स॰
५

एवकारः सर्वत्र संबध्यते। द्विजेभ्यः प्रचुरतरं धनं बहुलतरं वित्तं नैव दत्तं। ते
त्वदर्थबीजमंत्रैः नमःशिवायेति पंचाक्षरमंत्रैः हुतवहवदने वह्निमुखे
लक्षसंख्यैः लक्षाहुतिसंख्याकं हव्यं हवनीयं तिलादि नैवार्पितं न हुतं। गां
गतीरे जाह्नवीतटे ब्रताविप्र ब्रह्मचर्यादीनि परिचरणानि शुश्रूषादीनि तैः

॥ दुग्धैर्मध्वाज्ययुक्तैर्घटशतसहितैः स्नापितं नैव लिंगं नो लिप्तं॥
॥ चंदनाद्यैः कनकविरचितैर्भूषणैर्न प्रसूनैः॥ धूपैः कर्पूरयुक्तैर्वि॥
॥ विधरसयुतैर्नैवभक्ष्योपहारैः क्षंतव्य॥ १०॥ ५॥

रुद्रजाप्येन प्रसिद्धेन देवं महादेवं मया नैव दृष्टमिति॥ ९॥ अत्राप्ये
वकारद्वयं सर्वत्र संबध्यते। एतैर्लिंगं न स्नापितमित्याद्यन्वयः। के

राम
५



(15)

रैस्तैरिसतत आह। घटस्नातसहितैर्दुग्धैः पूर्णघटस्नातैर्लिंगं नस्नापितं। कृ
पंभूतैर्दुग्धैः मध्वाज्ययुक्तैः क्षौद्रघृतयुक्तैः चंदनाद्यैर्गंधादिभिर्नैवालिप्तं न
लेपितं। कनकविरचितैः स्वर्णनिर्मितैः भूषणैर्नैव पूजितं। कर्पूरयुक्तैः क

॥ करचरणाकृतं वाकर्मवाकायजं वाश्रवणनयनजं वा मानसं ॥
॥ वापराधं ॥ विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करु ॥
॥ णाब्धे श्री महादेव शंभो ॥ ११ ॥ ७ ॥

र्पूरारार्तिकसहितैर्धूपैर्नैव धूपितमिति च शेषः। नक्ष्योपहारैर्नैवेद्यैर्नै
वनोजितमिति शेषः। कथंभूतैर्नक्ष्योपहारैर्विविधरसयुतैः षड्रसयु
क्तैः॥ १०॥ सर्वापराधान्क्षमापयति। करचरणाकृतमिति। हे करुणा

15

अ.स.

श्री हे दयासमुद्र श्रीमहादेवेति पुरस्तादेव व्याख्यातं। हे देव चिच्छक्तिविला
सेन दीव्यति क्रीडतीति तथा तत्संबोधने जय जय उत्कर्षं भाविष्कुरु केन रू
पेण त्याकांक्षायामाह। एतत्सर्वं क्षमस्व। एतच्छब्दपरामृष्टं दर्शयति।

॥ चंद्रोद्भासितशेखरे स्मरहरे गंगाधरे शंकरे सर्पैर्भूषितकर्णकंठविव॥
॥रे नेत्रोत्थवैश्वानरे। दंतित्वक्कृतसुंदरांबरधरे त्रैलोक्यसारे हरे मो
॥ क्षार्थं कुरु चित्तवृत्तिमचलामन्यैस्तु किं कर्मभिः॥१२॥५॥

करस्व चरणकृतमित्यादिना वा शब्दाः समुच्चयार्थाः। करश्चरणाभ्यां वा
कृतं यत्पापं कर्म कायजं त्वगिंद्रियकृतं वा यत्पापं श्रवणमननजं श्रो
त्रेंद्रियचित्तेंद्रियाभ्यां वा जातं। मानसं मनसा संकल्पविकल्पात्मनैव
वा जातं अपराधं यत्पापं कर्म। उपसंहरति विहितमविहितं यत्किं

राम

चित्कर्मत्व समस्य नाम्नाये सर्थः ॥११॥ इदानीमाचार्यः परमकारुणिकतया
सर्वस्य लोकस्य परमेश्वरे मनोवृत्तिं प्रार्थयते ॥ चंद्रोद्भासितशेखरे इति ॥ तु
शब्दः आक्रोशे ॥ अहो हे लोक हरे विश्वनाथे मोक्षार्थमुत्कये चित्तवृत्तिं मनो
धारणां कुरु संपादय ॥ किमन्यैर्लौकिकैः कर्मभिरिसाक्रोशात्तीसन्वयः ॥ क
थंभूते हरे चंद्रेण ललाटस्थेनोद्भासितं शेखरं मुकुटं यस्य सः ॥ स्मर
कामं हरति दहतीति स्मरहरः ॥ गंगां स्वर्धुनीं धरति बिभर्तीति गंगाध
रः ॥ शंकरं करोतीति शंकरः ॥ सर्पैर्वासुकिप्रमुखैर्भूषितं श्रोत्रि
तं कर्णकंठयोर्विवरं छिद्रं स्थानं यस्य तं यस्य सः ॥ नेत्रत्रयाद्दुषितउ
सन्नो वैश्वानरोऽग्निर्यस्य सः ॥ दंतिलकुत्तं गजचर्मनिर्मितं सुंदरं

अ॰स॰
१

वस्त्रं धरतीति तथा तस्मिन्निति सर्वत्र। त्रैलोक्यस्य प्रपंचस्य सारेऽवधि
भूते अधिष्ठाने इत्यर्थः। कथंभूतां चित्तवृत्तिं निश्चलां॥१२॥ इदानीं स
र्वसा गेन ऐक्यं विधत्ते। किं दानेनेति। रेरे अहो जना एतत्सर्वं क्षणभंगुरत्त्व

॥ किं दानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं किं वा पुत्रकलत्र॥
॥ मित्रपशु निर्देहेन गेहेन किं॥ ज्ञात्वैतत्क्षणभंगुरं सपदि रे त्याज्यं॥
॥ मनो दूरतः स्वात्मस्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभं॥
॥१३॥ ५॥

णमात्र विना शि ज्ञात्वा बुधाः सपदि तत्क्षणमेव दूरतः दूरे त्याज्यं मनसापि
न ध्येयमित्यर्थः। तर्हि किं ध्येयमित्यत आह। मनः गुरुवाक्यतो गुरूप
दिष्टतत्त्वमस्यादिवाक्यात् स्वात्मस्थं स्वात्मस्वरूपनिष्ठं कुरु संपा

राम
१

दया आत्मरक्षसंपादने साधनमुपदिशति । जज्जज श्री पार्वतीवल्लभमि
ति । एतच्छब्दार्थे विवृणोति । किं दानेनेति । तथा च श्रुतिः । न कर्मणा न प्र
जया न धनेन त्यागेनैकेनामृतत्वमानशुरिति ॥ १३ ॥ उत्पन्नवैराग्यानु

॥ आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं प्रत्यायांति ॥
॥ गताः पुनर्न दिवसाः कालो जगद्भक्षकः ॥ लक्ष्मीस्तोयतरंग ॥
॥ भंगचपला विद्युच्चलं जीवितं तस्मान्मां शरणागतं शरणद ॥
॥ त्वं रक्ष रक्षाधुना ॥ १४ ॥ इति श्रीमच्छंकराचार्यविरचितं अ ॥
॥ पराधसुंदरस्तोत्रं संपूर्णं ॥ ६ ॥ ॥ श्रीराम ॥ ॥

वादेन स्वरक्षणं प्रार्थयते । आयुरिति । हे शरणद आश्रयप्रदत

अ॰ स॰
१०

स्मात्कारणादधुनात्रारण्यागतेलं रक्षरक्षावीक्षासे सारत्नयरव्यापना
र्थं॥ अक्षेतिपाठे संबोधनं॥ तस्मात्कस्मादिसपेक्षायामाह॥ यस्मा
त्सन्नपतो व्यथा आयुर्गछतीतिजानतोज्जनानोप्रतिदिनं आयुर्नश्य
ति॥ यौवनं तारुण्यं च क्षयं याति॥ तथा गता दिवसाः पुनर्न प्रसायां
ति नागछंति॥ तथा कालोपि निमेषाद्यात्मकः तदधिष्ठाता देवता ज
गद्भक्षकः॥ तथा लक्ष्मीरपि तोयतरंगात्तंगच्चपला जलवीचीरवंड
च्चंचला अस्थिराः॥ तथा जीवितमपि विद्युदिश्चलमस्थिरं यस्मा
त दिसुपसंहारः॥ ४॥ इति श्री अपराधसुंदरस्तोत्रव्याख्यानं॥ ५॥
श्रीसांबार्पणमस्तु॥ छ॥ ॥ ॥पोषवद्य १ भृगु॥ ५॥ राम

२०